॥ श्रीः ॥

# शिवपञ्चाक्षरीभाष्यम्

## श्रीमद्भगवान् पद्मपादाचार्य्यविरचितम्

---

जगाधरीनिवासी श्रीसारस्वतवंशावतंस मिश्र हरि-
धनात्मजवेदान्तनिष्ठपण्डितहरिनामदत्तविर-
चितया पञ्चाक्षरीशिवमहामंत्रभाष्य-
सुबोधिनीव्याख्यया
समलंकृतम् ।

---

तच्च
शेठ बद्रीदास पंडितहरद्वारोलालाभ्यां लोकोपकाराय
स्वकीयद्रव्यव्ययेन काश्यां चंद्रप्रभायंत्रालये मुद्रापितम् ।

१९५६

प्रथमवार १,००० । 

# शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धं | शुद्धं |
|---|---|---|---|
| टा० | ३ | भगवान् ... ... | भगवत् |
| टा० | ४ | निवासी | निवासि |
| ३ | १६ | त्रितीय ... ... | तृतीय |
| ९ | ६ | अव ... ... | अय |
| १२ | ७ | वैः दै ... ... | वेदैः |
| १३ | ८ | वाञ्छश्च ... ... | वाञ्छँश्च |
| १३ | १३ | तत्व ... ... | तत्वं |
| १४ | ४ | वाञ्छश्च ... ... | वाञ्छँश्च |
| १६ | १६ | मा ... ... | मां |
| १६ | १८ | शिव ... ... | शि |
| १७ | ८ | वन्यति ... ... | वनयति |
| १८ | १० | देवैब्रह्मा ... ... | देवैर्ब्रह्मा |
| १८ | १७ | यस्मात्वं ... ... | यस्मात्त्वं |
| २० | १० | भविष्यति ... | अभूत् |
| २५ | २ | श्रुतिः ... ... | श्रुतीः |
| ३३ | ५ | अथ तती ... ... | अथ तृती |
| ३५ | ७ | ततन्नो ... ... | तत्तन्नो |

॥ श्रीगणेशाय नमः ॥

॥ श्रीशारदायै नमः ॥

# शिवपञ्चाक्षरीभाष्यम् ।

नत्वासाम्बंशिवंप्रीत्याविद्वदानन्ददायिनी-
म् ॥ शिवपञ्चाक्षरीभाष्यव्याख्यां कुर्वेसुबोधि-
नीम् ॥ १ ॥ श्रीमद्भगवान् पद्मपादाचार्य्योभा
ष्यकाराणांमुख्यः शिष्यः सकलमुमुक्षुजनहि
तार्थायशारीरकसूत्रभाष्यविचारासमर्थानां च
श्रीमत्परमहंसपरिव्राजक श्रीमद्भगवत्पाद श्री
शंकराचार्य्यप्रणीतशारीरकसूत्रभाष्यसंक्षिप्तता
त्पर्यांशं श्रीमत्पञ्चाक्षरी नमः शिवायेतिम
न्त्रराजभाष्यरचनयादिदर्शयिषुस्तस्य त्रयोविं
शतिश्लोकैर्निवन्धं चिकीर्षुस्तन्निबन्धपरिसमा
प्तिप्रचयगमनाभ्यामीश्वरार्चनविधानान्तर्गतंप
रमानन्दशिवरूपवस्तुनिर्देशात्मकं मङ्गलमाचर
नआवृत्त्यादिनाव्याख्यानान्तरैर्विषयप्रयोजने
सूचयति । त्यागोहीति ॥

श्रीगणेशाय नमः। ओंनमः शि-
वायेतिमन्त्रः। तस्य प्रथमंव्याख्या-
नम्॥ त्यागोहिनमसोवाच्य आन-
न्दः प्रकृतेस्तथा ॥ फलंप्रत्ययवा-
च्यंस्यात्त्याज्यंपत्रफलादिकम् त्य-
जामीदमिदंसर्वंचतुर्णामिहसिद्धये

त्यागो नमः शब्दस्यवाच्यार्थः स च कर्मका
ण्डशास्त्रेप्रसिद्धः एतद्द्रोन्नंसोपकरणं नमः इत्या
दौ त्यजामीत्यर्थः शिवायेत्यत्रप्रकृतेः शिवशब्द
स्यवाच्य आनन्दः आनन्दोपलक्षितं वक्ष्यमाण
मर्थादिचतुष्टयंचशिवायेत्यत्रैव प्रत्ययस्य चतु
र्थीविभक्तेर्वाच्यार्थः फलम्। मनोभिलषितार्थ
सिद्धिरित्यर्थः अर्थाक्षिप्तंत्यक्तव्यार्थमाह त्या
ज्यंपत्रफलादिकमितिपदार्थमुक्त्वा वाक्यार्थमाह
त्यजामीदमिति इदंगन्धपुष्पादिकं गृहीत्वाना
दिगृहीतं च (बुद्ध्याद्यनात्मप्रपञ्चमर्थादिचतुर्णां
सिद्धयेयथायोगंगन्धादिकं) बुद्ध्यादिकंचत्यजा
मि अथत्यजामीदमिदंसर्वं चतुर्णामिहसिद्धये

इतिपदानामावृत्यादिनायथाऽभिलषितार्थक
ल्पनयामङ्गलविषयप्रयोजनप्रतिपादकानि व
र्णकानिवर्ण्यन्ते तत्रमङ्गलविषयकमाह त्यजा
मीदमिदंसर्वमितिइदंसर्वं यथोपलब्धं गन्धपुष्प
पत्रफलनैवेद्योपहारादिकं शिवाय त्यजामि स
मर्पयामीत्यर्थः कस्मैप्रयोजनायशिवाय शिव
शब्दोपलक्षितानां चतुर्णां अर्थधर्मकाममोक्षाणा
मिहैवास्मिन् शरीरेविद्यमानएवसिद्धये प्राप्त
यइत्यर्थः इतिप्रथमवर्णकम्। द्वितीयवर्णकेनवि
षयंसूचयति त्यजामीति इदमिदंसर्वमिदं तया
गृहीतमध्यस्तमनात्मप्रपंचं गेहदेहेंद्रियान्तःकर
णादिकं सर्वं त्यजामि अनात्मतयोत्सृजामि अ
त्रेदन्ताविषयस्यांतः करणादेरध्यस्तोपाधेस्त्या
गाद्भेदकाभावात्फलत्वेन प्रत्यगभिन्नाद्वितीयब्र
ह्मणः प्रतिपाद्यत्वाज्जीवब्रह्मणोरेकत्वलक्षणो
विषयः सूचितोभवतित्रितीयवर्णकेन प्रयोजन
माह त्यजामीदमिदंसर्वंचतुर्णामिहसिद्धये तत्रा
वान्तरप्रयोजनम् अर्थधर्मकामानां इहेत्युपल
क्षणम् ऐहिकामुस्मिकाणांसिद्धये स्वर्गीयशरीर

भोग्यानां कथमिहसिद्धिरितिनाशंकनीयंतत्का
रणीभूतापूर्वस्येह सिद्ध्यातेषामपीहसिद्धेः इ
मिदंपत्रपुष्पफलादिकंयथोपलब्धंत्यजामिशि
वायसमर्पयामिइत्यर्थः ततऐहिकार्थं धनंसुव
रजतादिकं लब्ध्वाऐहिककामं स्रक्चन्दनवनि
तापुत्रगृहादिकंसाधयिष्यामिपारलौकिकंचार्थ
धर्मंकर्मोपासनादिना संपाद्यपारलौकिकंकाम
स्वर्लोकादिब्रह्मविष्णुरुद्रशक्तिलोकान्तंसाधयि
ष्यामीतिभावः परमप्रयोजनं विरक्तावस्थासं
ध्यमाह त्यजामीदमिदं सर्वंमोक्षसिद्धयेइति
त्रायमाशयः प्रथममज्ञावस्थायां कृतसकामक
र्मोपासनाभोगसमयेविषयसुखस्यानित्यत्वमनु
भूयतत्रनिष्कामः सन्कृतनित्यप्रायश्चित्तनिष्का
मकर्मप्रभावात्प्राप्तविवेकवैराग्यादिरहंमोक्षसि
द्धयेइदमिदंसर्वंत्यजामिइदं देहाद्यन्तःकरणान्त
गेहादिब्रह्मलोकान्तं सर्वमध्यस्तंप्रपञ्चं अनाद्य
विद्ययात्मनि रज्जुसर्पशुक्तिकारजतवद्भासमान
मपित्यजामिस्वप्नार्थइवतत्र वासनांत्यक्त्वातत्स्
मृतिमपित्यजामिनिर्वासनोभवामीत्यर्थः कस्मै

प्रयोजनायमुक्तिलब्धये तत्रायंक्रमः विषयसुख स्यानित्यत्वेन तत्रवासनांत्यक्त्वाशमादिसंपाद्य गुरूपदिष्टतत्वमस्यादिवाक्यश्रवणादिजन्यापरो क्षात्मज्ञानप्रचण्डमार्त्तण्डप्रकाशापगताऽज्ञानत मस्कोहमखण्डैकरससत्यज्ञानानन्दात्मलाभवि गतशोकः परमानन्दात्मस्वरूपइहैवभविष्यामी त्यर्थः इहपदोपादानेन तरतिशोकमात्मवित् ब्र ह्मविद्ब्रह्मैव भवति अत्रैवामृतमश्नुते सयोहवै तत्परमंब्रह्मैवभवतिइत्याद्याःश्रुतयोऽनुगृहीता भवन्तिदेहेंद्रियादिबुद्ध्यन्तात्मवादिनश्च प्रत्या ख्याताभवंति भ्रमाधिष्ठानात्मशेषत्वप्रतिपादने नचशून्यवादिनोपिनिरस्ताभवन्ति इति प्रथमं व्याख्यानम् ।

ओम् नमः शिवाय । अथवा न-
मसोवाच्यः प्रणामो दैन्यलब्धये ॥
दैन्यं सेवा तथाज्ञप्तिः सिद्धिः स-
र्वस्य वस्तुनः । नमामि देवदेवेशं
सकामोऽकाम एव वा ॥ ३ ॥

अथद्वितीयंव्याख्यानम् अथवेति अथवा प्र
कारान्तरे नमसोवाच्यः प्रणामः णामप्रह्वत्वेशब्दे
अस्माद्भावे असुन्प्रत्यये नमनं इतिनमः प्रसिद्ध
एव तत्फलमाह दैन्यलब्धये ईश्वरप्रणामस्य फल
प्रदत्वेस्मृतिप्रमाणम् एकोपिकृष्णस्यकृतः प्रणा
मोदशाश्वमेधावभृथेनतुल्यइत्यादिदैन्यशब्दस्या
र्थमाह स्वयमेव दैन्यंसेवा तथाज्ञप्तिः सिद्धिः सर्व
स्यवस्तुनइति फलितार्थमाह नमामिदेवदेवेशंस
कामोऽकाम एववेति तत्रसकामतापक्षेऽयमर्थः दे
वदेवेशंनमामिकिमर्थं दैन्यापरपर्यायसेवालब्ध
येपरमभक्तिप्राप्त्यैइतिभावः दैन्यमाहात्म्यं नि
म्बार्काचार्य्यैरुक्तं स्वकृतदशश्लोक्याम् कृपास्यदै
न्यादियुजिप्रजायते ययाभवेत्प्रेमविशेषलक्षणा
भक्तिरनन्याधिपतेर्महात्मनः साचोत्तमासाधन
रूपिकापरेति पराभक्तिमाहात्म्यसूचकं देवहूतीं
प्रतिकपिलदेववचनम् भक्तिः सिद्धेर्गरीयसीति
तथासर्वस्यवस्तुनः सिद्धयेऐहिकामुष्मिकस्रक्च
न्दनादि ब्रह्मलोकान्तसकलैश्वर्यलब्धये इत्यर्थः
अकामस्तुज्ञप्तिलब्धये ज्ञप्तिर्ज्ञानमात्मस्वरूपसा

क्षात्कारस्तत्सिद्धयेमोक्षायेत्यर्थः अनेनेश्वरस्यभोगमोक्षप्रदत्वात्स्वतंत्रत्वाच्च तस्यैवोपास्यत्वंनान्यस्येत्युक्तं भवति मोक्षप्रदत्वेनासङ्गत्वं च निरूपितं भवति ॥३॥ इति द्वितीयंव्याख्यानम् ॥

ओं नमः शिवाय । नञानिषिध्यते भावविकृतिर्जगदात्मनः । मसनं देवदेवेशनेहनानास्ति शब्दतः ॥ ४ ॥

अथ तृतीयव्याख्यानम् नञेति नमः शिवायेत्यत्रहेशिवहेदेवेश नञाअव्ययेनजगदात्मनः जगदाकारेणभासमानस्यापिपरमेश्वरस्यतवमसनंपरिणामःभावविकृतिः भावरूपेणविकारः आकाशादिरूपादेहान्तःकरणादिरूपा च निषिध्यते कथं 'मसीपरिणामे' दैवादिकोधातुःतस्यलटिरूपंमस्यति इति, न मस्यति नविपरिणमते इति नमः । क्विप्प्रत्ययान्तः अपरिणामी अविकारीत्यर्थः तस्य संबोधने हे नम इति केन प्रमाणेनाविकारित्वं परमेश्वरस्येत्याकांक्षायामाह नेहना

नास्ति शब्दतः मनसैवेदमाप्तव्यं नेह नानास्ति कि-
चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती-
ति कठवल्लीश्रुतेः अस्या अर्थः इदं ब्रह्म आचार्या-
गमसंस्कृतेन मनसा एकरसमाप्तव्यं ज्ञातव्यं आ-
त्मैव नान्यदस्तीति इहास्मिन्नात्मनि आप्तेना-
नाप्रत्युपस्थापिकाया अविद्याया निवृत्तत्वादि-
ह ब्रह्मणि नानाकिंचन अणुमात्रमपि नास्ति
ज्ञातायां रज्जौ सर्प इव यस्तु पुनरनिवृत्ताऽविद्यः
इह ब्रह्मणि नानेव देहादिकमात्मत्वादिनानाने-
व पश्यति अज्ञातरज्जुरिव सर्पं स मृत्योर्मृत्युं पुनः
पुनर्जन्ममरणादिलक्षणं संसारं प्राप्नोतीत्यर्थः
नमः शब्दार्थमुक्त्वा शिवायेत्यत्र अयशब्दार्थ-
माह अयेति गमयेत्यर्थे गमयेत्युक्ते कं कुत्र गमये-
यमित्याकांक्षायामाह ।

प्रणाम इति देहादेरन्नमयादिकोशपंचकस्य
गेहादेः सकलभूतभौतिकाकाशादिचतुर्दशलो-
कात्मकस्य जगतो योऽभिमान इदमहमस्मीति दे-
हाद्यभिमानस्तथा इदं मेऽस्ति इदं मे स्यादिति ऐ-
हिकामुष्मिकभोग्यविशेषगेहादेरभिमानः तस्य

द्विविधस्यापि अभिमानस्यनाशनंनिवर्त्तनंप्रणा
मः कुतएतत् प्रणामस्यात्मसमर्पणात्मकत्वाद
भिमानद्वयत्यागंविनात्मसमर्पणं न संभवति अ
हंचत्वां प्रणतस्त्वद्भक्तः निर्गतदेहगेहाद्यभिमानः
तस्मान्नित्यशः सदाशुद्धोऽस्मि अधिकारी च अतो
मामेवात्मनि अवगमयेत्यर्थः अपरिणामिनि नि
र्विकारेनिरवच्छिन्नेसदैकरूपेत्वयिस्थानान्तरग
मनवद्गमनासंभवान्ममापिवस्तुतः पूर्णात्मनस्त्व
त्तोऽभिन्नत्वेनत्वद्रूपत्वादनाविर्भूतमिवात्मानमे
वात्मज्ञानप्रदानेनाविर्भूतमिवकृत्वा परिपूर्णानं
दैकरसात्मानमेवमांकुर्वित्यर्थः। इति तृतीयंव्या
ख्यानम् ।

अयेतिगमयेत्यर्थे तस्माच्छुद्धोऽस्मि
नित्यशः। प्रणामोदेहगेहादेरभिमा
नस्यनाशनम् ॥५॥ शिवोब्रह्मादिरू
पः स्याच्छक्तिभिस्तिसृभिः सह। अ
थवा तूर्यमेवस्यान्निर्गुणं ब्रह्म तत्पर
म्॥६॥ नमसो नमने शक्तिर्नमनं ध्या

नास्तिशब्दतः मनसैवेदमाप्तव्यं नेह नानास्ति किंचन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति कठवल्लीश्रुतेः अस्या अर्थः इदं ब्रह्म आचार्यागमसंस्कृतेनमनसा एकरसमाप्तव्यं ज्ञातव्यं आत्मैव नान्यदस्तीति इहास्मिन्नात्मनि आप्तेनानाप्त्युपस्थापिकायाअविद्याया निवृत्तत्वादिह ब्रह्मणि नानाकिंचन अणुमात्रमपि नास्ति ज्ञातायां रज्जौ सर्पइवयस्तुपुनरनिवृत्ताऽविद्यः इह ब्रह्मणिनानेवदेहादिकमात्मत्वादिनानानेवपश्यति अज्ञातरज्जुरिवसर्पंस मृत्योर्मृत्युं पुनः पुनर्जन्ममरणादिलक्षणं संसारं प्राप्नोतीत्यर्थः नमः शब्दार्थमुक्त्वाशिवायेत्यत्र अयशब्दार्थमाह अयेतिगमयेत्यर्थे गमयेत्युक्ते कं कुत्र गमयेयमित्याकांक्षायामाह ।

प्रणाम इति देहादेरन्नमयादिकोशपंचकस्य गेहादेः सकलभूतभौतिकाकाशादिचतुर्दशलोकात्मकस्यजगतोयोऽभिमानइदमहमस्मीति देहाद्यभिमानस्तथा इदं मेस्तिइदं मेस्यादिति ऐहिकामुष्मिकभोग्यविशेषगेहादेरभिमानः तस्य

द्विविधस्यापि अभिमानस्यनाशनंनिवर्त्तनंप्रणा
मः कुतएतत् प्रणामस्यात्मसमर्पणात्मकत्वाद
भिमानद्वयत्यागंविनात्मसमर्पणं न संभवति अ
हंचत्वां प्रणतस्त्वद्भक्तः निर्गतदेहगेहाद्यभिमानः
तस्मान्निस्यशः सदाशुद्धोऽस्मि अधिकारी च अतो
मामेवात्मनि अवगमयेत्यर्थः अपरिणामिनि नि
र्विकारेनिरवच्छिन्नेसदैकरूपेत्वयिस्थानान्तरग
मनवद्गमनासंभवान्ममापिवस्तुतः पूर्णात्मनस्त्व
त्तोऽभिन्नत्वेनत्वद्रूपत्वादनाविर्भूतमिवात्मानमे
वात्मज्ञानप्रदानेनाविर्भूतमिवकृत्वा परिपूर्णानं
दैकरसात्मानमेवमांकुर्वित्यर्थः । इति तृतीयंव्या
ख्यानम् ।

अयेतिगमयेत्यर्थे तस्माच्छुद्धोऽस्मि
नित्यशः। प्रणामोदेहगेहादेरभिमा
नस्यनाशनम् ॥५॥ शिवोब्रह्मादिरू
पः स्याच्छक्तिभिस्तिसृभिः सह । अ
थवा तूर्यमेवस्यान्निर्गुणं ब्रह्म तत्पर
म् ॥६॥ नमसो नमने शक्तिर्नमनं ध्या

नमेवच। चतुर्थ्यां तादात्म्यसंबंधः कथ्यते प्रत्यगात्मनोः ॥ ७ ॥

अथ चतुर्थव्याख्यानम् शिव इति। शिवः परमात्मा तिसृभिः स्वमायागुणकृताभिरीक्षणादि व्यापारहेतुभूताभिः सर्जनपालनविलापनशक्तिभिः सहितःसन् ब्रह्मादिरूपः स्यात् अत्रश्वेताश्वतरश्रुतिः। तमीश्वराणां परमंमहेश्वरमित्यादि अत्रभाष्यम् ईश्वराणांजगदुत्पत्तिस्थितिलयहेतुभूतानांब्रह्मविष्णुरुद्राणांपरममुत्कृष्टं महेश्वरंचेश्वराणामपीशितृत्वस्यतदधीनत्वादिति शिवपुराणे च द्वितीयाध्याये सद्रूपाद्ब्रह्मणएवेक्षणपूर्विकाप्रकृतेरुत्पत्तिस्ततएवपुरुषोत्पत्तिः तौचाकाशवागुक्तकृततपः प्रभावोत्पन्नजलशयनान्नारायणीनारायणनामानावास्तांनारायणनाभिकमलाद्ब्रह्मोत्पत्तिर्विष्णुसमागमः तयोः संशयोच्छेदार्थंलिंगप्रादुर्भावः तत्प्रमाणाज्ञानेपंचास्यशिवप्रादुर्भावः वरप्रदानंच रुद्ररूपोत्पत्तिः ब्रह्माणीलक्ष्मीकालिकानांप्रकृतेरुत्पत्तिः ब्रह्मविष्णु

द्भ्यस्तत्प्रदानमितिअत्रकारणस्यसतईक्षणादि निरूपणाज्जडायाः प्रकृतेस्तदसंभवात्प्रकृतेःस्व रूपस्यचेक्षणमात्रत्वनिरूपणात्सांख्यादिमतनि रास इति एतेनसगुणोपासनमुक्तंभवति अथनि र्गुणतुर्यब्रह्मरूपंशिवप्रतिपादिकांमाण्डूक्यश्रुति माह प्रपंचोपशमंशांतंशिवमद्वैतंचतुर्थंमन्यंतेस आत्मासविज्ञेयइतिमाण्डूक्यश्रुतिमेवानुसृत्या ह अथवेति अथवापक्षांतरेशिवशब्देनसगुणंनि र्गुणं च ब्रह्मोच्यतेलक्ष्यतेच शिवशब्दार्थमुक्त्वान मः शब्दार्थमाह नमसोनमनेशक्तिरिति नमःश ब्दस्यनमनेनम्रीभावेशक्तिः नमनं इतिनमः भा वेऽसुन्नमः शब्दलक्ष्यार्थमाह नमनंध्यानमेव च ध्यानंनिदिध्यासनमेव शिवायेतितादर्थ्येचतुर्थी तस्याः शिवार्थमर्थः प्रत्यगात्मतादात्म्यलाभाये त्यर्थः तथाचवाक्यार्थः अहं शिवतादात्म्यलाभा य नमनंनिदिध्यासनंकरोमि तेन ध्यातृध्यानेप रित्यज्यब्रह्माहमस्मीतिध्येयैकगोचराज्ञातवृत्ति प्रवाहसम्पादनेनात्मन्येवसमाहितोभविष्यामि इत्यर्थः एवमात्मनिष्ठस्यात्मानंपरिपूर्णानन्दैक रसंजानत आनन्दोद्गारमाह ॥

अहं शिवःशिवोहं च मन्येवेदा न्तनिष्ठया। इत्येवं नम इत्युक्तं वेदैः शास्त्रैश्च सर्वशः ॥ ८॥ अथवा दास एवाहमहं दास इतीरणम्। इत्येव नम इत्युक्तं वेदैःशास्त्रैश्च सर्वशः ॥ ९ ॥

अहंशिवः शिवोहंचेति एवं नमइत्यस्यध्यानार्थत्वेहेतुमाह यतः कारणात्सर्वैर्वेदैः आत्मावाअरेद्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः इत्यादिभिः शास्त्रैश्च शनैः शनैरुपरमेद्बुद्ध्याधृतिगृहीतयाआत्मसंस्थंमनःकृत्वानकिंचिदपिचिंतयेदित्यादिभिर्ध्यानमेवोक्तं इतिहेतोर्नमःशब्दस्य तात्पर्यमप्येवमुक्तं नमनंध्यानमेवचेति एवंवेदांतनिष्ठयातत्वमसिअहंब्रह्मास्मीत्यात्मनिष्ठो भवामीत्यर्थः। मंदमध्याधिकारिणावुद्दिश्याह।

अथवादास एवाहमिति नमः शब्दं नमस्कारार्थमभिप्रेत्याह नमइतिनमस्करोमीत्येवईरणं कथनंयत् तद्दासएवाहमहंदास इतीरणम् कुतः।

यतः सर्वशः सर्वैर्वेदैरीशानःसर्वविद्यानां ईश्वरः सर्वभूतानामित्यादिभिः सर्वभूतनियंतृत्वकथने नभूतानांदासत्वं ईश्वरप्रवर्त्त्यत्वमुक्तंशास्त्रैश्चई श्वरः सर्वभूतानांहृद्देशेर्जुनतिष्ठति। भ्रामयन्सर्व भूतानि यंत्रारूढानिमाययेत्यादिभिश्चेश्वराधी नत्वकथनेनजीवानांदासत्वमेवोक्तंभवतीति॥९॥

अथवेदमिदं सर्वं त्यजामि पर माप्तये। अर्थं धर्मं च कामं च वाञ्छ ञ्चजगदीश्वरम्॥ १०॥ एतन्मन्त्रा र्थतत्वज्ञैर्वेदवेदान्ततत्परैः॥ निर्णी तं तत्वगर्भं यद्विज्ञेयं मुक्तिलब्धये ॥११॥ अथवा मुक्तिलाभाय ध्येयंत त्वविवेकतः । भिन्नं बुध्वाहृदादेवं मंत्रेणेशं जगद्गुरुम्॥ १२ ॥

इदानींनमःशब्दस्यत्यागार्थत्वप्रतिपादनेनपू र्वोक्तमुपासनमत्राप्यनुवदतिअग्रिमश्लोकेविशेषा र्थस्यवक्ष्यमाणत्वात्। अथवेति इदमिदंसर्वंपरम

स्यपरमेश्वरस्याप्रयेप्राप्तये अनुग्रहार्थमिति याव
तूत्यजामिपत्रफलादिकंसमर्पयामीति किमिच्छं
स्त्यजसीत्याकाङ्क्षायामाह अर्थं धर्मं च काममेवा
ञ्छञ्जगदीश्वरम् अर्थधर्मकामानिति सगुणो
पासनं जगदीश्वरंपरमेश्वरभावमितिनिर्गुणो
पासनमिति ॥१०॥ अत्रपूर्वाचार्यसम्मतिंस्वाभिप्रे
तार्थंचाह एतदिति एतत्सर्वंसगुणोपासनंनिर्गुणो
पासनंच वेदतत्परैर्मंत्रार्थज्ञैःकर्मोपासननिष्ठैःक
र्मउपासनंचनिर्णीतंतथातत्वज्ञैर्वेदान्ततत्परैर्जग
दीश्वरोपलक्षितब्रह्मोपासनतत्परैर्ब्रह्मोपासनंनि
र्णीतम् इति अत्राभिप्रेतार्थमाह सत्त्वगर्भंशा
स्त्रतात्पर्यार्थगोचरंआत्मतत्वज्ञानार्थसाधनं मु
क्तिलब्धये तदेवविज्ञेयमिति तत्र कर्म सगुणो
पासनं च क्रमेणमुक्तिसाधनंब्रह्मोपासनं च सा
क्षान्मुक्तिलब्धये इतिविज्ञेयमिति ॥११॥ अथ पु
नरुत्तमाधिकारिणं प्रत्याह। अथवेति प्रज्ञावतां
किंक्रममुक्तिप्रदेनोपासनेन मुक्तिलाभार्थंविवेक
तोविवेचनपूर्वकंआत्मतत्वंध्येयंविज्ञेयमित्यर्थः।

विज्ञानप्रकारमाह हृदाविवेकवत्याबुद्ध्यामंत्रेण सपर्यगाच्छुक्रमित्यादिनातत्वमस्यादिमहावाक्येनचजगद्गुरुमीशंदेवं जगत्कर्तृत्वसर्वज्ञत्वाद्यध्यस्तादीशोपाधितोंतः करणाद्यध्यस्तजीवोपाधितश्च भिन्नंतन्निषेधाधिष्ठानमसंगंरजतादिविवर्ताधिष्ठानमिवशुक्त्यादिकंयथार्थतयाज्ञात्वायत्तद्नारोपितस्वरूपं परंतत्वंतदेवध्येयं ब्रह्माहमस्मीत्यनुसन्धेयमित्यर्थः इति चतुर्थं व्याख्यानम् ॥ १२ ॥

ॐनमःशिवाय नमेरच्चिनमःप्रोक्तोजंतास्याञ्जगदीश्वरे । तस्माद्वासोहमित्येवं मत्वा मां प्रापयात्मनि ॥ १३ ॥ अस्मिञ्छेते जगतत्सर्वं तन्मयं शब्दगामियत् । तद्ज्ञानाच्छिव इत्युक्तं कारणं ब्रह्मतत्पराः ॥ १४ ॥ न मा यस्यास्ति लक्ष्मीश्च सोहं देवोनसंशयः । तस्मान्मे प्रापयेहैव लक्ष्मीं विद्यां सनातनीम् ॥१५॥ यस्मा

दानन्दरूपस्त्वं देवैर्वेदैर्निगद्यसे । तस्मान्मे देहि योगीश भद्रं ज्ञानं सुभावनम् ॥ १६ ॥

अथपञ्चमंव्याख्यानम् । नमेरिति नमस्कारा र्थस्य नमधातोः पचादेरच् इतिअच्प्रत्यये नम तीतिनमःप्रणामकर्ताउपासकः प्रोक्तः तथाजंता इति जमुअदने अस्यधातोस्तृच्प्रत्ययांतः जम तीतिजंता सर्वस्यात्ता उपसंहर्तेतिजगदीश्वरेशि वेप्रयोगः स्यात् कस्माच्छिवएवजंतेतिशब्दवा च्यइत्याकांक्षायां शिवशब्दस्यापि तदर्थकत्वा दिति इणशीभ्यांवन् उपधायाइत्वं शेतेऽस्मि न्सर्वमितिशिवः शंभुःसोपि सर्वसंहर्तेतिभावः त स्यसंबोधने हेशिव उपसंहर्त्तः अहंनमः नमनक र्तातवदासोहम् । योयच्छ्रद्धः सएव सः इत्येवंमांम त्वाज्ञात्वाआत्मनि अयप्रापय आत्मस्वरूपज्ञा नप्रदानेनात्मस्वरूपंमाकुर्वित्यर्थः ।

अथषष्ठं व्याख्यानमाह । अस्मिन्निति सर्वंज गच्छेते प्रलयकालेलयंप्राप्नोत्यस्मिन्निति शिव

शब्दोपपादितमव्यक्तं प्रकृतिरित्यर्थः तथाय
च्छब्दगामिवाग्विषयं नामरूपात्मकं प्रपंचजा
तंस्थितिकालेवभासते देहेंद्रियादिकं भूस्वर्गादि
कंचतत् तन्मयंप्रकृतिमयं प्रकृतेरेवपरिणामइ
त्यर्थः। तथाश्रुतिः वाचारम्भणंविकारो नामधे
यं मृत्तिकेत्येवसत्यमिति तद्वानात्तस्याव्यक्त
स्यवानात् वननात् भावेघञ् तंशिमव्यक्तंप्रकृ
तिंवन्यतिभाजयतिनामरूपाभ्यांव्याकरोति आ
काशादिविभागंप्रापयति इतिशिवो डप्रत्यया
न्तः कारणं ब्रह्मशिवशब्देनोच्यते हेतत्परा ब्र
ह्मतत्पराइत्यर्थः अथवा वागतिगंधनयोरित्य
स्यधातोर्वानशब्दः तद्वानात् तस्याव्यक्तस्यस्व
स्मिन्नव्यक्तरूपेणावस्थितस्य वानात् सूचना
न्नामरूपाभ्यांव्याकरणादित्यर्थः शिवशब्दार्थ
मुक्त्वा नमःशब्दार्थमाह नमायस्यास्तीति अत्र
माशब्दो लक्ष्मीवाचकः इन्दिरालोकमातामा
इत्यमरः नमायस्यास्ति यस्यममालक्ष्मीर्ना
स्तिसोऽहं नमशब्दवाच्यः लक्ष्मीहीनोदरिद्रो
स्मि अत्रनसंशयः कुतएतत् हेलक्ष्मीशमायेश

प्रकृत्यधिपते यतोहंदेवः दीव्यतिविजिगीषति निराकर्त्तुमिच्छति दरिद्रमज्ञानमितिदेवः दरिद्रंनिराकृत्य लक्ष्मींविद्याम्प्राप्तुमिच्छामीत्यर्थः तस्मान्ममज्ञानाधिकारित्वात् मेमह्यंविरक्ताय मुमुक्षवेऽधिकारिणे प्रापय देहीत्यर्थः। इहैवास्मिन्नेवजन्मनिलक्ष्मीमैश्वर्यमित्यर्थः किंतदैश्वर्यमित्यतआह विद्यामात्मविद्यांसनातनींत्रिकालाबाध्यामेकरसामपरिच्छिन्नरूपांसाम्राज्यलक्ष्मीमित्यर्थः ॥१५॥ एतमेवार्थंपद्यांतरेणस्फुटयति यस्मादिति यस्मात्वं देवैर्ब्रह्मादिभिर्वेदैश्च आनन्दरूपोनिगद्यसेतस्मात् हेयोगीशमेमह्यंसुभावनंस्वरूपावगतिकारकंभद्रमात्मानन्दप्रदंज्ञानमात्मसाक्षात्काररूपंदेहीतियोजना ॥ १६ ॥

ओम्० नमः शिवाय० यस्मात्त्वं नेतिनेतीतिनत्यर्थंमासिवेदजम् । त तस्मान्नमोसिभद्रंमेयतोजातोऽन्नमो नमः ॥ १७ ॥

अथसप्तमव्याख्यानम् यस्मात्वमितिहेभगवन्य

स्मात्कारणात्त्वंवेदजंबृहदारण्यवेदोक्तंनेतिनेती
तिनञर्थंनञ्विषयंनिषेध्यजातं सकलमूर्तामूर्ता
त्मकाकाशादिप्रपञ्चंतद्वासनारूपंचान्तः करणा
द्यध्यस्तप्रपञ्चंमासिमानगोचरत्वापादनेनव्यव
हारविषयंकरोषियथामानपात्रं प्रस्थंव्रीहियवा
दिकं माति स्वात्मनि धारणेन निःसारणेन च मा
नविषयंकरोति स्वयं चनिर्लेपस्तिष्ठतितथात्व
मपीदंजगद्विवर्तरूपेणात्मन्याविर्भूतं तिरोभूतं
चकरोषिस्वयञ्च निषेधोद्दिष्टइव स्वरूपतोऽस
ङ्गैकरसःसच्चिदानन्दात्मनातिष्ठसि दृष्टंचैतत् य
थालोके महारजनंवासः तत्रमहारजनंतुहरि
द्रातयारक्तंवासोपि महारजनंप्रोच्यते एवंस्त्र्या
दिविषयसंयोगाच्चित्तस्यापिवासना रूपरञ्जना
कारमुत्पद्यते तदेवनञानिषिद्ध्यते तस्मान्न
मोसि कथमेवंनिर्द्देश इत्यतआह नेति नेतीति
ऐवंनिर्द्देश इदंच नकारद्वयं वीप्सार्थं यद्य
त्प्राप्तंतत्तन्निषिध्यते तथाचसर्वोपाधि निराक
रणद्वारेण सैंधवघनवदेकरसंप्रज्ञानघनमनन्त
रमबाह्यं सत्यस्यसत्यं ब्रह्माहमस्मीतिआत्म

न्येवावस्थिताप्रज्ञाभवति कथमेवंब्रह्मणोनिर्दे शोऽत्राहनह्येतस्मादितिनेत्यन्यत्परमस्ति ह्यिय स्मादिति न इति न इति एतस्मादन्यत्परंनि र्द्देशनं नामरूपरहितस्यात्मनो नास्तितस्माद यमेवनिर्द्देशोब्रह्मणः अथनामधेयंब्रह्मणः ना मैवनामधेयम् किंतत्सत्यस्यसत्यम् प्राणावैस त्यंतेषामेषसत्यमिति नमःशब्दार्थः तस्मान्नमो सिसकलनिषेधा धिष्ठानत्वेनसर्वाश्रयोसीत्यर्थः एवंभूतस्य ते स्वरूपज्ञानान्मेममापिभद्रं कल्या णमेवाभविष्यति किंतद्भद्रमित्यतआह यतोजा तोऽनमोनमः यतःकारणादहं अनमःपरिच्छिन्न तयात्मानंमन्यमानोऽपि नमोजातः स्वभावसि द्धाऽपरिच्छिन्नस्वरूपोजात स्रसर्वाश्रयः सर्वा श्रयोजातइत्यर्थः ॥ १७ ॥

शिवंशिवमथाप्राप्तः शिवायेति निगद्यसे शिवायमेतथाप्राप्त्याशि वायंकुरुसर्वदा ॥ १८ ॥

नमःशब्दार्थमुक्त्वाशिवायशब्दार्थमाह शि वंशिवमिति शिवंसकलोपद्रवरहितं पुनः शिवं

निरतिशयाऽखण्डैकरसानंदस्वरूपं आप्राप्तः आसमंतात्परिपूर्णतयाप्राप्तःशिवायइति त्वंनिगद्यसे प्रतिपाद्यसेशास्त्रैः हेशिवाय परिपूर्णानन्दस्वरूप मे मम तथाप्राप्त्या शिवायत्वस्यपरिपूर्णभावस्य प्राप्त्या मामपिसर्वदा परिपूर्णानन्दस्वरूपं कुर्वित्यर्थः ॥ १८ ॥

ओम्० नमः शिवाय । शिवांयातोमहाभद्र नमोहंमाययाध्रुवम् । ततोनमायमह्यं मयिशिवायंकुरुसर्वथा ॥ १९ ॥

अथाष्टमव्याख्यानम् । शिवांयातइति शिवांशक्तिं ब्रह्मविद्यारूपांयातः अयासीदिति शिवायस्तस्यसंबोधनेहेशिवाय अतएव हेमहाभद्रपरमकल्याणरूपत्वं शिवायोसि निजस्वरूपस्थोसि अहंतुमायया अविद्ययाप्रकृतिवाचकत्वेनप्रसिद्धस्य मायाशब्दस्य अविद्यावाचकत्वे प्रमाणं श्रुतिवाक्यं जीवेशावा भासेन करोतिमाया चाविद्या च स्वयमेव भवतीति न

मोहंनमालक्ष्मीर्विद्यायस्यास्तीतिनमः अहंन
मः निर्विद्योस्मीतिध्रुवं निश्चितमित्यर्थः यस्मा
दहंनिर्विद्यः आत्मविद्याभिलाषी चत्वंचपूर्ण
विद्यः शरणागतपालकश्चसर्वज्ञत्वात् सर्वेश्वर
त्वात्ततः कारणात्नमायनिर्विद्याय मह्यंमद
र्थं आत्मदर्शनायेतियावत् । इदंमः मशब्दवा
च्यंसर्वंदृश्यजातं इदंताविषयंशिवायंकुरु कथं
मशब्दवाच्यमिदंता विषयं सर्वमित्यत्रमश
ब्दस्यव्युत्पत्तिरुच्यते मसीपरिणामे दैवादिकः
अस्यधातोः क्विपिरूपंमस्यति परिणमतेविकार
भावंगच्छतीतिमः परिणामीदंसर्वं देहगेहादि
प्रपञ्चजातं शिवायंकुरु भवद्रूपेणैवप्रकाशमानं
यथास्यात्तथाकुरु सर्वथासर्वप्रकारेण त्वत्स्वरू
पातिरेकेणाप्रतीयमानं कुर्वित्यर्थः येनाहंत्व
त्स्वरूपमेवेदंताविषयंस्वात्मानं चपश्येयमि
त्यर्थःतथाचोक्तंस्मृतौ वासुदेवः सर्वमितिसम
हात्मासुदुर्लभइति ॥ १९ ॥

ओंनमः शिवाय। शिवमेषिय
तोज्ञप्त्याशिवायस्त्वं प्रपठ्यसे।।नते

मायायतोज्ञप्त्यानमोवेदैः प्रपठ्य
ते॥२०॥ नमोहं च शिवायोहंनमो
मह्यंनमोनमः ॥ नमोनमायशुद्धाय
मङ्गलाय नमोनमः ॥२१॥

अथनवसंव्याख्यानम् । शिवमेषीतिज्ञप्ति
र्ज्ञानंस्वस्वरूपाविर्भावः तयाज्ञप्त्याशिवंनिर
तिशयानन्दरूपमात्मतत्वमेषि जानासियतःका
रणात् अतस्त्वं शिवाय इणगतावस्याण्
प्रत्ययेरूपम् प्रपठ्यसेशास्त्रैः तथातयैवज्ञप्त्या
ज्ञानेन स्वरूपसाक्षात्कारेण तेतवमायाउपा
धिरविद्याचनविद्यतेयतः कारणात् अतस्त्वं
नमः प्रपठ्यसेनविद्यते मा यस्यसनमः इंदि
रालोकमातामेतिमाशब्देन लोकमाताजगत्क
र्त्रीप्रकृतिरव्यक्तमुच्यते साऽखण्डाद्वैतैकरसान
न्दस्वरूपस्यतवनविद्यते अव्यक्तात्तुपरः पुरु
षोव्यापकोऽलिङ्गएव चेतिश्रुतेरितिवेदैर्नमःप्रप
ठ्यसे उक्तस्यफलितमाह नमोहमिति अह
मपिचत्वदनुगृहीतो ज्ञातात्मस्वरूपोस्मित्वद्वय

तिरिक्तं न किंचिदात्मनिपश्यामि त्वत्स्वरूप मेवसर्वंपश्यामि एवमेकात्मदर्शनान्नमोहंनिर विद्योहं । निर्गताऽविद्योपाधित्वाच्छिवाय:स्व रूपद्रष्टाचाहंअतोमह्यंमदर्थं मत्प्रशंसायैनमोन म: नमोयंनमोयंनिरविद्योयं निरविद्योयंइति वीप्सयानम: शब्द: प्रयुज्यतेऽभिज्ञैरितिशेष: इतिनवमम् ॥ इदानीमात्मलाभसंतुष्टउक्तविशे षणविशिष्टायभगवते शंभवेप्रणामंकरोति न मोनमायेति नमायअविद्यारहिताय अतएवशु द्धाय निर्विकारायशुद्धत्वादेवमङ्गलाय आनन्द प्रदायनमोनम: ॥ २१ ॥

नमोनमस्सनंशंभो निराकाराय तेनम:। निर्गुणंनिष्क्रियंशान्तमित्या द्या: श्रुतयोजगु: ॥ २२॥ नमोब्रह्मनि राकारं शिवायं शिवसर्वदाऽस्तोहं चनमाभद्रंशिवायोहंन संशय: ॥२३॥

पुनर्व्याख्यातनामानंप्रणमति नमोनमसन मिति हेशम्भो तेतवमसनंपरिणाम आकारवि

शेषोनविद्यते त्वं नमाअसिअतोहेनमोनिराका
राय ते तुभ्यंनमइति निर्विकारत्वेश्रुतिः प्रमाण
यति निर्गुणंनिष्क्रियंशांतमित्याद्याः श्रुतयस्त्वां
निराकारंजगुः कथयांचक्रुरित्यर्थः पुनर्विशिन
ष्टिनमोब्रह्मेति हेशिवत्वंनमःशब्दोक्तंनिराकारं
शिवायंपरिपूर्णंब्रह्मासिसर्वदा एकरसोऽसितत्वपू
र्णत्वान्ममापित्वद्रूपत्वादतोऽहमपिनमाः परि
णामरहितःशिवायःपरिपूर्णरूपश्चाहंनसंशयइति
इतिनवमंव्याख्यानम् । व्याख्याननवरत्नानां
मालांविज्ञमनोरमाम् ॥ श्रीमच्छङ्करहृद्भूषांहर
नामाभिधोऽव्यधात् ॥ ओंनमः शिवाय ॥
एवं पञ्चाक्षरीमहामन्त्रव्याख्यानमुक्तमिदा
नीं शारीरकसूत्रभाष्यतात्पर्यं गर्भितमेतदि
तिज्ञानाय शारीकभाष्यसंक्षिप्ततात्पर्यांशस्या
स्मिन् भाष्यव्याख्याने किंचिदन्तर्भूतत्वंवर्ण्य
ते ॥ अथातोब्रह्मजिज्ञासेति प्रथमाधिकरणसू
त्रंतस्यायमर्थः अथेतिसाधनचतुष्टयसंपत्त्यनन्त
रम् । अतइति यतोब्रह्मातिरिक्तत्वेनभासमान
स्याध्यस्तानित्यप्रपञ्चस्य मिथ्यात्वात्तदधिष्ठान

भूतं ब्रह्मैवसत्यंअतोब्रह्मज्ञानार्थंविचारःकर्तव्य इतिप्रथमाधिकरणार्थउक्तः। तद्विचारार्थमध्या सश्चनिरूपितः सचप्रथमव्याख्यानेन्तर्भूतस्तत्र त्यजामीदमिदं सर्वमितीदंताविषयस्याध्यस्त सर्वप्रपञ्चस्य निषेधद्वाराऽखण्डानन्दैकस्वरूप स्यब्रह्मणएवसत्यत्वेनविचार्यत्वनिरूपणात् १॥

अथप्रथमाधिकरणे ब्रह्मजिज्ञासितव्यमि त्युक्तं किंलक्षणंपुनस्तद्ब्रह्मेत्याकांक्षायांद्वितीया धिकरणसूत्रम्।जन्माद्यस्ययतइति।अस्यजगतो नामरूपाभ्यांव्याकृतस्य कर्तृभोक्तृसंयुक्तस्यमन साप्यचिंत्यरचनारूपस्य जन्मादिजन्मस्थिति भङ्गंयतःसर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मे तिवाक्यशेषइति द्वितीयाधिकरणार्थः सचषष्ठ व्याख्यानेंतर्भूतस्तत्र सकलजगत्कारणीभूतमा येशत्वस्यनिरूपणात् ॥ २ ॥

द्वितीयाधिकरणेजगतः कारणंब्रह्मेत्युक्तंत त्रहेतुभूतंतृतीयाधिकरणं शास्त्रयोनित्वादिति ऋग्वेदादिशास्त्रस्या नेकविद्यास्थानोपबृंहित स्यदेवतिर्यङ्मनुष्यवर्णाश्रमादि व्यवहारहेतोः

सर्वार्थविद्योतिनः सर्वज्ञकल्पस्ययोनित्वात्का
रणत्वात् अस्तिहिपुरुषनिःश्वासवत्तस्मान्महतो
भूताद्योनेरस्यशास्त्रस्यसंभवःप्रादुर्भावः स्मरण
मितियावत् अथवाशास्त्रं योनिः कारणंयस्यब्र
ह्मणोयथावत्स्वरूपाधिगमे॥ इतितृतीयाधिक
रणार्थः॥सचषष्ठव्याख्यानेन्तर्भूतःतत्राऽस्मिंच्छे
तेजगत्सर्वमित्यादिना सर्वकारणत्वस्यतथाय
स्मादानन्दरूपस्त्वंदेवैर्वेदैर्निगद्यसेइति शास्त्र
योनित्वस्योभयविधस्यनिरूपणात् ॥ ३ ॥

तृतीयाधिकरणेब्रह्मणः शास्त्रयोनित्वमुक्तं
तत्रहेतुत्वेनचतुर्थाधिकरणमाह। तत्तुसमन्वया
दिति तत्तुब्रह्मसर्वशक्तिजगदुत्पत्तिस्थितिलय
कारणंवेदान्तशास्त्रादवगम्यतेइतिकथं समन्व
यात् सर्वेषुहिवेदान्तेषुवाक्यानितात्पर्येणैवतस्या
र्थस्यप्रतिपादकत्वेसमनुगतानितान्येवाह। सदे
वसोम्येदमग्रआसीत् एकमेवाद्वितीयमित्यादी
नियस्मात्सर्ववेदान्तानांब्रह्मण्येवसमन्वयः त
स्मात्सर्वजगज्जन्मादिकारणंसर्वज्ञं सर्वशक्तिच
ब्रह्मैवेतिचतुर्थाधिकरणार्थः सचषष्ठव्याख्याने

न्तर्भूतः तत्रतद्वानाच्छिवइत्युक्तंकारणंब्रह्मतत्प राइतिब्रह्मणएवसर्वकारणत्वनिरूपणात् ॥ ४ ॥

एवंचतुःसूत्र्यां चतुर्भिरधिकरणैर्ब्रह्मणएवसर्वज्ञत्वेनसर्वशक्तिमत्वेन जगत्कारणत्वेनचसर्वाधिष्ठानतयासत्यत्वेनिश्चितेतद्विज्ञानार्थंविचारः कर्त्तव्यइतिनिरूपितंभवति तत्रान्यस्यापिकस्यचिज्जगत्कारणत्वंसंभवतिनवेतिसंशयनिरासार्थंपञ्चमाधिकरणसूत्रम् ईक्षतेर्नाशब्दमिति ननु प्रधानस्यानेकात्मकस्य परिणामसम्भवादनेकात्मकजगत्कारणत्वोपपत्तिर्मृदादिवत् नाऽसंहतैकात्मकस्यब्रह्मणइत्येवंप्राप्तेसूत्रम् ईक्षतेर्नाशब्दमिति नसांख्यपरिकल्पितमचेतनंप्रधानंजगत्कारणंशक्यंवेदान्तेष्वाश्रयितुं यतश्चशब्दंहितत् नजगत्कारणत्वेनवेदप्रतिपादितम् । कुतःप्रधानस्याशब्दत्वम् । ईक्षतेःईक्षितृत्वश्रवणात्कारणस्य कथं ॥ एवंहिश्रूयतेसदेवसौम्येदमग्रआसीत् एकमेवाद्वितीयमित्युपक्रम्य तदैक्षत बहुस्यां प्रजायेयइतिकारणस्यईक्षितृत्वश्रवणात् जडस्य प्रधानस्यतदसंभवात् प्रधानंनजगत्कारणमि

ति पञ्चमाधिकरणार्थः । सचषष्ठव्याख्यानेन्तर्भू
तः तत्रअस्मिंश्छेतेजगत्सर्वंतन्मयंशब्दगामिय
त् तद्धानाच्छिवइत्युक्तंकारणंब्रह्मतत्पराइति प्र
धानशब्दवाच्याऽव्यक्तस्य ब्रह्माधीनत्वनिरूप
णात् ब्रह्मणश्चकारणत्वनिरूपणादिति शेषेषुष
डधिकरणेषु आनन्दमयत्वाऽऽदित्यन्तर्गतत्वा
काशज्योतिः प्राणादिशब्दप्रतिपाद्यत्वादीनित
स्यैत्र परमात्मनउक्तानितेषामपितत्रैवान्तर्भा
वइति ॥ अथप्रथमाध्यायस्यद्वितीयपादेसप्तभिर
धिकरणैरस्पष्टब्रह्मलिंगैर्ब्रह्मणएवोपास्यत्वमुक्तं
प्रधानजीवादीनांनोपास्यत्वमितिचोक्तं तच्चद्वि
तीयव्याख्यानेन्तर्भूतं । तत्रनमामिदेवदेवेशास
कामोऽकामएववा इति ब्रह्मणएवोपास्यत्वनि
रूपणात् ॥ अथप्रथमाध्यायस्यतृतीयपादे च
तुर्दशभिरधिकरणैर्ब्रह्मणःसर्वाधिष्ठानत्वंश्रेष्ठत्वं
अक्षरशब्दवाच्यत्वंप्रणवेनोपास्यत्वंप्रकाशकत्वं
विज्ञानमयादिशब्दवाच्यत्वंचोक्तं तच्चसप्तमव्या
ख्यानेन्तर्भूतं तत्रशिवं शिवमथाप्राप्तइत्यादि
नाश्रेष्ठत्वादेः सर्वरूपस्यसर्वाधिष्ठानत्वस्यचनि

रूपणात् प्रथमाध्यायस्यचतुर्थपादे अष्टभिरधि करणैः पुनःप्रधानकारणतानिराकरणपूर्वकंब्रह्म णएवकारणत्वमुक्तं तत्तुषष्ठव्याख्यानेन्तर्भूतंत त्रापिप्रधानस्य ब्रह्माधीनतानिरूपणद्वाराब्रह्म णएवसर्वकारणत्वनिरूपणात् ॥ ४ ॥

इति प्रथमाध्यायव्याख्यासमाप्ता ।

अथाविरोधाख्यद्वितीयाध्यायस्य प्रथमेपा दे त्रयोदशभिरधिकरणैः सांख्यस्मृत्यादिविरो धपरिहारंकृत्वानिर्गुणस्यापि ब्रह्मणोविवर्ताधि ष्ठानत्वेनप्रकृतित्वंनिमित्तत्वंच साधितंतत्तुषष्ठ सप्तमव्याख्यानयोरन्तर्भूतं तत्रषष्ठव्याख्यानेप्र कृतेः स्वातंत्र्यनिषेधद्वाराब्रह्मणः कारणत्ववि धानात् सप्तमेचयस्मात्त्वंनेतिनेतीतिनजर्थं मा सिवेदजमित्यनेनविवर्ताधिष्ठानत्वप्रतिपादनेना सङ्गत्वनिरूपणात् ॥ १ ॥

द्वितीयाध्यायस्य द्वितीयपादे अष्टभिरधिक रणैःसांख्यादिबौद्धान्तानांमतस्यखण्डनंतच्चचतु र्थव्याख्यानेन्तर्भूतं तत्रशिवोब्रह्मादिरूपः स्या च्छक्तिभिस्तिसृभिःसहेतिसर्वस्यप्रकृत्यंतस्याध्य

स्तत्वप्रतिपादनेनाखण्डैकरसतुरीयात्मनएववा स्तवत्वप्रतिपादनात् देहादिबुद्ध्यन्तः प्रपञ्चस्या ध्यस्तत्वेनाभासमानमात्रत्वप्रतिपादने नाना त्मत्वनिरूपणात्तन्निराकरणेनैव सांख्यादीनाम पिनिराकृतत्वात् तेषांतन्मात्रात्मत्वमानित्वा त् प्रधानपरमाण्वादीनां प्रकृत्यन्तर्गतत्वात् आत्मनएववास्तवत्वप्रतिपादनेन शून्यवादिम तस्यनिराकृतत्वात् ॥ २ ॥

द्वितीयाध्यायस्य तृतीयपादे सप्तदशभिरधि करणैराकाशस्यानित्यत्वं स्वरूपवतोब्रह्मणोवा योरुत्पत्तिरेवंक्रमेण ब्रह्मणोजगज्जनकत्वंजीव स्य ब्रह्मरूपत्वंचोक्तंतच्चषष्ठसप्तमव्याख्यानयो रंतर्भूतंतत्रब्रह्मणएवसर्वकारणत्वप्रतिपादनेना काशादीनांजन्यत्वेनानित्यत्वप्रतिपादनात् । तथा शिवायमेतथा प्राप्त्याशिवायंकुरुसर्वदेति जीवस्यब्रह्मरूपत्वनिरुपणात् ॥ ३ ॥

द्वितीयाध्यायस्य चतुर्थपादे नवभिरधिकर णैरिन्द्रियाणामात्मसमुत्पन्नत्वं परिच्छिन्नत्वं देवताधीनत्वं ईश्वरस्यैवचप्राणादिनिर्मातृत्वमु

क्तंतच्चचतुर्थव्याख्यानेन्तर्भूतं तत्रशिवस्यब्रह्मादिरूपत्वप्रतिपादनेन प्राणेन्द्रियादिकारणत्वनिरूपणात् ॥ ४ ॥

इति द्वितीयोऽध्यायः ।

अथसाधनाख्यस्तृतीयाध्यायस्य प्रथमेपादे षड्भिरधिकरणैर्जीवस्य भाविशरीरबीजरूपभूतसूक्ष्मवेष्टितस्यैवेतोगमनम् ॥ आरोहणमवरोहणंचसस्यादौ जीवस्यनजन्मकिंतुसंश्लेषमात्रम् प्रथमाहुतौश्रद्धाशव्देनापांप्रतिपादनम् ॥ उपासनाफलभोक्तृत्वंचोक्तम् तच्चचतुर्थव्याख्यानेन्तर्भूतं तत्रशिवोब्रह्मादिरूपःस्यादित्यादिनापञ्चाग्निविद्यादिगन्तव्यब्रह्मलोकाद्यधिष्ठातृत्वस्यपरमात्मनः शिवस्यैवनिरूपणात् अर्थंधर्मंचकामंच वाञ्छश्चजगदीश्वरमितिसकलकर्मोपासनाफलभोग्यप्रदत्वस्यापि परमेश्वरस्यैवनिरूपणात् ॥ १ ॥

अथसाधनाख्यस्तृतीयाध्यायस्य द्वितीयपादे अष्टभिरधिकरणैर्ब्रह्मणोऽसङ्गत्वनिरूपणाय स्वप्नादिसृष्टेर्मिथ्यात्वं ब्रह्मणोनिषेधातीतत्वेन

सत्यत्वं तदन्यस्यावस्तुत्वं च कर्मफलोत्पत्तिं प्रतिईश्वरस्यैवकर्तृत्वं नापूर्वस्येत्यादिप्रतिपादितं तच्चद्वितीयव्याख्यानेन्तर्भूतं तत्रनमामिदेवदेवेशं सकामोऽकामएववेतिब्रह्मणएवसर्वकामप्रदत्वनिरूपणात् ॥ २ ॥

अथततीयाध्यायस्य तृतीयपादे षट्त्रिंशद्भिरधिकरणैश्छान्दोग्यबृहदारण्यकश्रुत्युक्तयोः पञ्चाग्नि विद्योपासनयोर्विध्यनुष्ठानफलसाम्येनैकत्वं गुणोपसंहारस्य कर्तव्यत्वंनानोपासनाकथनंविकल्पेनसमुच्चयेनवा प्रतीकोपासनायां स्वेच्छिकत्वंविकल्पसमुच्चययोर्यथा काम्यंचोक्तं तच्चद्वितीयव्याख्यानेन्तर्भूतं तत्रेश्वरस्यसर्वकर्मफलप्रदत्वनिरूपणात् उपासनाप्रकाराणांचेश्वराराधनत्वात् ॥ ३ ॥

अथततीयाध्यायस्य चतुर्थपादे सप्तदशभिरधिकरणैरात्मज्ञानस्य स्वतन्त्रत्वंआत्मबोधस्यकर्मानपेक्षत्वंविद्यायाः स्वोत्पत्तौकर्मसापेक्षत्वंभ्रष्टोर्द्धरेतसःप्रायश्चित्तस्यामुष्मिकशुद्धिजनकत्वंनव्यवहारार्हत्वजनकत्वम् सालोक्यादिमुक्ती

नांसातिशयत्वंनिर्वाणमुक्तेश्च निरतिशयत्वमु
क्तं तच्चचतुर्थव्याख्यानेन्तर्भूतंतत्रेश्वरस्य ब्रह्मा
दिरूपत्वस्यशुद्धस्वरूपत्वस्यचनिरूपणात् ॥४॥

अथफलाख्यचतुर्थाध्यायस्य प्रथमपादे च
तुर्दशभिरधिकरणैः श्रवणादीनामावर्तनीयत्वंउ
पासनायामासनस्यनियतत्वंध्यानसाधनस्यैका
ग्र्यस्यप्रधानत्वाद्दिग्देशकालानामनियमः ज्ञा
निनांपुण्यपापलेपाभावःप्रारब्धस्यभोगेननाशः
संचितकर्मविनाशः ज्ञात्राजीवेनस्वात्मतयाब्र
ह्मणोग्राह्यत्वंप्रतीकेऽहंदृष्ट्यभावः नित्यकर्मणा
स्तारतम्येनविद्यमानत्वम् अधिकारिणांमुक्ति
सद्भावइत्याद्युक्तं तच्चचतुर्थव्याख्यानेन्तर्भूतंत
त्रध्येयंतत्वंविवेकतइति विवेकादिद्वाराध्यान
समाध्यादिपूर्वकत्वेनमुक्तेर्निरूपणात् ॥ १ ॥

चतुर्थाध्यायस्यद्वितीयपादे एकादशभिरधिक
रणैर्वागादीनां मनसिवृत्तिलयोनस्वरूपतः तत्व
विदोवागादीनांपरमात्मनि निःशेषेणलयः उपा
सकानामूर्द्धस्थानादेवोत्क्रमणं तेषांनिशायामपि
मृतानांरश्मिप्राप्तिःतत्वविदःप्राणानोत्क्रामन्तिइ

त्याद्युक्तं तच्च चतुर्थव्याख्यानेन्तर्भूतंतत्रब्रह्मादि रूपिणो निर्गुणस्वरूपिणश्चपरमात्मनोनिरूपणा त् उक्तफलप्रदत्वस्यतत्रानायासेनसम्भवात् ॥२॥ अथचतुर्थाध्यायस्य तृतीयपादे षड्भिरधिकरणै रर्चिरादिकस्य ब्रह्मलोकमार्गस्यैकत्वंउत्तरमार्गे णकार्यब्रह्मगमनम् प्रतीकोपासकानांब्रह्मलोका प्रापणं तेषां देवतान्तरोपासकत्वात्ततल्लोकगम नमित्याद्युक्तंतच्च चतुर्थव्याख्यानेन्तरर्भूतम् । त त्रशिवोब्रह्मादिरूपःस्यादितिसर्वसामर्थ्यस्य अ र्थंधर्मंचकामंचवाञ्छंश्चपरमेश्वरमिति सगुणो पासनस्यनिर्गुणोपासनस्य चफलप्रदातृत्वस्य परमेश्वरस्यैवनिरूपणात् अथचतुर्थाध्याय स्य चतुर्थपादे मुक्तिरूपस्यवस्तुनःपुरातनत्वम् मुक्तस्यचब्रह्मणोऽभिन्नत्वम् मुक्तस्वरूपभूतस्य ब्रह्मणोयुगपत्सविशेषनिर्विशेषत्वम् अर्चिरादि मार्गेणब्रह्मलोकप्राप्तस्योपासकस्य भोगवस्तूनां सृष्टौमानससंकल्पस्यैवहेतुत्वं देहान्तरसृष्टावपि ऐच्छिकंजगत्सृष्टौस्वातन्त्र्याभावेपि भोगमोक्ष योःस्वातन्त्र्यम् । सदेहत्वमदेहत्वमपितस्यस्वे

च्छिकमेवचेत्यादिनिरूपितं तच्च चतुर्थनवमव्या ख्यानयोरन्तर्भूतं तत्राहंशिवः शिवोहंचेत्यादि ना मुक्तस्यब्रह्मणोऽभिन्नत्वनिरूपणात् अथवा दासएवाहमित्यादिना उपासनायाश्चसम्यङ्नि रूपणात् ॥ नमोहंचशिवायोहमित्यादिनानवम व्याख्यानेजीवस्याऽनादिब्रह्मरूपत्वनिरूपणात् ओंनमःशिवाय॥इयंसारस्वतापत्यहरिनामाख्य शर्मणा ॥ पञ्चाक्षरीमन्त्रभाष्यव्याख्याप्रोक्तासु बोधिनी ॥ १ ॥ शरेषुनवचन्द्राब्देसप्तम्यांसोम वासरे ॥ मार्गशीर्षेशुक्लपक्षे व्याख्यानंपूर्तिमभ्य गात् ॥ २ ॥

इति श्रीसारस्वतवंशावतंसमिश्र हरिधनात्मजवेदान्तनिष्ठ

हरिनामदत्तविरचिता पञ्चाक्षरीशिवमहामंत्रभाष्य

सुबोधिनीव्याख्या समाप्ता ।

शुभम् ।



इदंपुस्तकं विनैवमौल्यम् ।

यह पुस्तक बनारस कुंजगली में पंडित हरद्वारीलालजी
से विना ही कीमत के मिलेगी ।

